कपिल सूत्रम् - with the भाष्य of नरेन्द्र - Edited and Published by Pt. गोपालचन्द्र at Purana प्रकाश प्रेस. Calcutta, 1929 V.E.

Sankhya phil

(6)

# कापिलसूत्रम्।

महर्षि-कपिलेन संक्षेपेणोक्तम्।

द्विजश्रीनरेन्द्रकृतभाष्यसमेतम्।

कलिकाता-माणिकतला-ष्ट्रिटाख्यस्थाने पुराणप्रकाश-
यन्त्रे श्रीगोपालचन्द्रेण मुद्रितः।

संवत् १९२९।

# कापिलसूत्रभाष्यम् ।

ओं नमः परमात्मने ।

यमीश्वमानन्त्यसुखं समाधिना
मनोषिणामाप मनो विचिन्त्य तम् ।
ऋषिञ्च नत्वा कपिलं पुरातनं
विनिर्ममे कापिलसूत्रभाष्यकम् ॥

अथेह जगति खलु निखिलप्राणिनां दुखं माभूत्, सुखं मे भूयादिति सततं सुखोत्पत्तिदुःखहाने अभिलषिते स्तः । नहि दुःखतिरोभावमन्तरेण सुखस्यानुभवो भवति । विरोधिधर्मयोस्तयोस्तमःप्रकाशयोरिव सामानाधिकरण्याभावात् । यद्यनादि-संसारे दुखं न स्यात् तदा तन्निराकरणोपायं कः कुर्यात् । स्यादेतत् तापत्रयप्रतीकारविषयेऽवश्यं यत्नः करणीयः, यतस्तापत्रयनिवृत्तिरेव परमपुरुषार्थ इति । शास्त्रज्ञानमेव तदुपायः नान्यदुपायान्तरं प्राचीनशास्त्रप्रतिपादितस्य ज्ञानस्य विवेकहेतुत्वात्, इति मनसि विचारितवान् भगवान् पञ्चशिखाचार्य्यः, स्वाध्यायोऽध्येतव्य इत्यादिनाध्ययनविधिना स्वाङ्गस्वाध्या-

यार्णवपारङ्गत आत्मा प्रकृतितो विवेक्तव्य इति चरमफलदात्र-तदा संगृह्य ऋषिवरं नारायणस्वरूपं कपिलम् उपागमत्। ततः सदसद्विचारामलचित्तः कपिलोऽनेन द्वाविंशतिसूत्रेणाज्ञान-निराकरणेन हेयं प्रतिपादयिष्यन् शिष्यावबोधाय संक्षेपेण शास्त्रारम्भं प्रतिजानीते। नन्वथ त्रिविधदुःखात्यन्तनिवृत्तिरत्यन्त-पुरुषार्थ इत्यादि षड़ध्यायस्य सांख्यस्यानेन पौनरुक्तता भवति, श्रुतिप्रतिपाद्यस्य समाधिविशारदस्य कपिलस्यैवैषञ्ञापित्वात्। तथाहि श्रुतिः "ऋषिं प्रसूतं कपिलं यस्तमग्रे ज्ञानैर्बिभर्त्ति जाय-मानञ्च पश्येत्" इति। सत्यमुच्यते, यत एकविषयत्वेन बालबोधि-तदास्योक्तत्वात्, उभयोः शास्त्रयोरात्मतत्त्वनिरूपणं सांख्यशब्दस्य योगरूढ़तया सांख्यसंज्ञाभिहिता। तथाच "संख्यां प्रकुर्वते चैव प्रकृतिञ्च प्रचक्षते। तत्त्वानि च चतुर्विंशत् तेन सांख्याः प्रकी-र्त्तिता" इति महाभारतप्रमाणात्। किन्तावत् तत् शास्त्रम्?

सूत्रम्। अथातस्तत्त्वं समासः ॥१॥

"अथ स्यान्मङ्गले प्रश्ने कार्य्यारम्भेष्वनन्तरे। अधिकारे प्रतिज्ञायामन्वादेशादिषु क्वचित्" इत्यादिना यद्यप्यथ शब्दस्यैते बहवोऽर्था दृश्यन्ते तथाप्यत्राधिकारार्थ एव गृह्यते अन्येषामर्था-नाम् अनुपयोगात्, नन्वादौ ग्रन्थस्य मङ्गलाचरणस्यावश्यकत्वम्। न हि मङ्गलाचरणमृते ग्रन्थस्य परिसमाप्तिर्मन्यते इति चेत्, सत्यं, ब्रूमः। अथ शब्दस्योच्चारणेन निखिलविघ्नप्रचयनिवारकेण मङ्गलार्थः प्रतीयते, अतः शिष्टाचाराविरोधो भवतीति। अथ इत्यधिकारे। अतः शब्दो हेत्वर्थः। यथेह कर्म्मचितो लोकः चीयते एवमेवामुत्र पुण्यचितो लोकः चीयते इत्यादि श्रुत्या कर्म्मफलस्यानित्यत्वादित्यर्थः। तत्त्वशब्दो वेदप्रतिपाद्य-याथा

र्थ्थः। समसनं समासः संक्षेप इति यावत् तत्त्वस्य समासः तत्त्वसमासः इति वेदितव्य इति शेषः।

तान् स्फुटीकर्त्तुं सूत्रमवतारयति—

**कथयामि अष्टौ प्रकृतयः ॥२॥**

कथयामीति च्छेदः क्रमेण प्रकृतीः कथयामीत्यर्थः। कः प्रकृत्यर्थः, कतमा पुनःप्रकृतिः, कियती वा? प्रकरोतीति प्रकृतिः, प्रसवधर्मिणीत्यर्थः। सा द्विविधा, शुद्धा मिश्रा च। सत्वरजस्तमसां साम्यावस्थया अव्यक्तं प्रधानम् अचेतनं जगतः कारणमित्येका शुद्धा। एतेषां वैषम्यावस्थया महत्तत्त्वाहङ्कारपञ्चतन्मात्राणि प्रकृतिविकृत्यभिधानानि। सप्त मिश्राः। एता अष्टौ प्रकृतयः। तथाहि प्रकृतेर्महान्, महतोऽहङ्कारः, अहङ्कारात् पञ्च तन्मात्राणि इति। महत्तत्त्वं किन्तावत्? बुद्धिविशेषः, अहङ्कारस्तु अहङ्करोमीति व्यवहारात्मकः, पञ्च तन्मात्राण्यपि शब्दस्पर्शरूपरसगन्धविशेषाणि सूक्ष्माणीति। ननु कथम् अचेतनादेव उत्पत्तिः, न हि चेतनकर्त्तारं विनोत्पत्तिरस्ति व्यतिरेकेण घटवत्। एतदेव सत्यमुच्यते केवलमचेतनेऽपि शक्तिर्दृश्यते यथा। चेतनमपि क्षीरं वत्सविवृद्धये भवति, एवमचेतनात् गोमयादेः कीटो जायते तद्वत् अथाहो क्षीरे गोमये च मातृगोशरीराधिष्ठानात् चेतनाद्धेतोः शक्तिर्मन्येत, नैतत् साधूच्यते, गोमातृशरीरयोः चेतनावगतेः कुतस्ताभ्यां त्यक्तयोः क्षीरगोमययोः चेतनावगतिः, न कदाचिदपि तयोरुत्सृज्यमानयोः चेतनं प्रतीयते। अथवा यथायस्कान्तस्य चेतनासंयुक्तस्य सन्निधिमात्रेण स्पन्दनशक्तिर्दृश्यते एवं सर्वत्रापि अचेतनाच्चेतनो भवतीति बोद्धव्यम् ॥२॥

प्रकृतिमुक्त्वा विकाराननुवदितुं सूत्रयति।

षोड़शकस्तु विकारः ॥३॥

षोड़शसंख्यको विकारः तु शब्दोऽवधारणे। अथ कोऽयं षोड़शको विकारः। पृथिव्यप्तेजोवायुगगनानि पञ्च भूतानि, वाक्पाणिपादपायूपस्थानि पञ्च कर्मेन्द्रियाणि, श्रोत्रत्वङ्नेत्र-रसनाघ्राणानि पञ्च ज्ञानेन्द्रियाणि मनश्च, एष षोड़शको वि-कारः। ननु भूम्यादीनां घटाद्युपादानभूतानां कथं विकारता? पञ्चतन्मात्रवत् तेषामुभयात्मकत्वात् न क्षीरस्य विकारो दधि, तद्विकारो नवनीतम्, तद्विकारो दौर्गन्ध्यमित्याद्यनवस्थाप्रसक्तेः। किञ्च घटपटादीनि वस्तूनि न क्षित्याद्यतिरिक्तानि भवन्ति, वाचा-रम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यमित्यादि श्रुतेः। एतावता भूप्राणिबीजादिषु घटपयोऽङ्कुरादिषु च इन्द्रियसन्नि-कर्षज्ञानस्य तुल्यत्वेन न वस्त्वन्तरमिति भावः।

यथा रथादेरचेतनस्याश्वेन सह संयोगात्, गतिक्रिया, तथा सर्वत्र चेतनसम्बन्धेन चेतनोपलब्धिरित्यभिप्रेत्य वर्णयति।

पुरुषः ॥४॥

पुरि शरीरे शेते इति पुरुषः, यत्संयोगेन सर्वं चैतन्यवद्-भाति स भोक्ता निर्लेपो नित्योऽप्रसवशीलः। तथाच श्रुतिः, अङ्गुष्ठमात्रः पुरुषो ज्योतिरिवाधूमकः ईशानो भूतभव्यस्य स एवाद्य स उ श्व एतद्वैतत् अशब्दमस्पर्शमरूपमव्ययमित्यादि। नन्वत्र पुरुष एक एव बहवो वा किन्तावत् प्राप्तं, नाद्यः सति पुरुषस्यैकत्वे एकस्मिन् मृते सर्वे म्रियेरन् इत्यादिना सहसा सृष्टिलोपापत्तेः। तथापि पुरुषस्य एकत्वं स्यात् औपाधिक-

भेदेन बहुत्वाद् घटाकाशमठाकाशवत्। ननु पुरुषस्य औपाधिकानेकत्वेऽभ्युपगम्यमानेऽपि कालेन संसारलोपप्रसक्तिः स्यात्, तत्त्वज्ञानोपाधिविनाशे निर्मोक्षश्रवणात् न ह्यवृद्धिमतो वस्तुनोऽवस्थितिरस्ति यथा परिमाणरहितानां धनराशीनाम् आयहीनानां वितरणशीलस्याचिरेणैव कालेन समूलक्षयो भवेत् तद्वत्, तन्न युक्तियुक्तं. मातापितृभ्यां जातस्य पुत्रशरीरस्य तयोरंशभूतत्वात् तच्छरीराधिष्ठितपुरुषयोरंशः वासनाया अंशस्य पुत्रादौ केन वार्य्यते, न ह्युभयोः शरीरानंशेन प्राणिनः आविर्भवन्तीति स्वसमानजातीयचैतन्यं कार्य्येष्ववगम्यते यथा तन्त्वादेरुपादानात् रक्तपीतसंयोगिनो रक्तः पटः पीतः पटः इति तद्वत् महाभारते श्रुतावपि च, कलेरंशस्तु संजज्ञे भुवि दुर्य्योधनो नृप। आत्मा वै जायते पुत्र इत्यादि एतेन अनादीनां निखिलपुरुषाणां पित्रोरंशभूतानाञ्च मध्ये केचित् संसरन्ति, केचित् मुच्यन्ते, नैतत् सम्प्रदायविदां रुचिकरम्, अपरिणामिसांख्यपुरुषविरोधात्, अतो द्वितीयः, सुखदुःखजन्ममरणादीनां नानात्वत् वर्णाश्रमादिधर्म्माणां भूयस्त्वाच्च। नास्मिन् पक्षेऽपि जगतो लोप इति वाच्यं पुरुषस्यानन्तत्वे विरोधात्. एतानि पञ्चविंशतितत्त्वानि सांख्याचार्य्या मन्यन्ते। अथ पुरुष आदिमान् कथं न स्यात् न अनादिवासनावशेन घटीयन्त्रवत् कुलालचक्रवच्च पुनःपुनः जन्ममरणप्रतिपाद्यश्रुत्यनवकाशात्। तथाहि श्रुतिः, संवत्सरो वै प्रजापतिस्तस्यायने दक्षिणञ्चोत्तरञ्च तत् वेह वै तदिष्टापूर्त्ते कृत इत्युपासते ते चान्द्रमसमेव लोकमभिनयन्ते त एव पुनरावर्त्तन्ते तस्मादेत ऋषयः प्रजाकामाः दक्षिणं प्रतिपाद्यन्ते एष ह वै रयिः पितृयान अथोत्तरेण तपसा ब्रह्मचर्य्येण श्रद्धया विद्यया आत्मानमन्विष्यादित्यमभिजायन्ते इत्यादि।

इदानीं पञ्चविंशतितत्वान्युक्त्वा अवान्तरगुणान् विभजते ।

## त्रैगुण्यम् ॥५॥

त्रयो गुणाः सत्वरजस्तमांसि तेषां भावस्त्रैगुण्यम् । इतश्च प्रधानं त्रैगुण्यं सत्वरजस्तमसामन्योन्यगुणप्रधानभावं हित्वा साम्येन स्वरूपेणावस्थानं बुध्यते कस्मात् श्रुतिविहितत्वात् । तथाहि अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानां स्वरूपाः । अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः ॥ एतैरुपादानावस्थितगुणैः सुखदुःखाद्यात्मकैः सह निःसङ्गस्य चेतनस्य पुरुषस्य सम्बन्धोऽस्ति सन्निधिमात्रत्वात् प्रदीपतमसोरिव । ननु कथं निरवयवे जगदुपादानभूते गुणसम्बन्धः सम्भवेदिति, लोके सावयवेषु उत्पलादिषु नीलादयो गुणा दृश्यन्ते, न कुत्रापि निरवयवेषु । सत्यम्, इदानीं वर्ण्यते लोकवदलौकिकस्य वेदाववोधस्य शक्तिर्न विद्यते वैदिकस्य सर्वशक्तिमत्त्वात् । अथ वा यदि लौकिकेषु निरवयवेषु परमाणुषु शुक्लादयो गुणा मन्यन्ते, तदा सर्वशक्तिमतो जगत्कारणस्यापि दूषणं भूषणमेव ।

प्रकृतेः सत्वादिगुणान्युक्त्वा तासामपि धर्म्मान् विवदिषुः सूत्रयति ।

## सञ्चरः प्रतिसञ्चरः ॥६॥

उत्पत्तिः सञ्चरशब्दार्थः, प्रलयः प्रतिसञ्चरशब्दार्थः । अतः अष्टाभ्यः प्रकृतिभ्यः सञ्चरः श्रूयते एवं तासु प्रतिसञ्चरश्च । कस्मात् यतो वेदएव प्रकृतेः महान्, महतोऽहङ्कारः, अहङ्कारात् पञ्च तन्मात्राण्यभिजायन्ते, एवं तन्मात्राणि अहङ्कारे अहङ्कारो-महति महान् मूलप्रकृतौ लीयन्ते इति । यथा कूर्म्मः स्वकीया-

ग्रङ्गानि क्वचित् प्रसरति क्वचित् आकुञ्चति, एवं ऊर्णनाभः स्वयमेव सूत्रं वहिर्निःसरति अन्तः आक्रामति, तद्वत् प्रकृतयोऽप्यनुलोमप्रतिलोमेन इति। इदानीम् एतेषां सांख्यमन्यमानानां पदार्थानां सुखदुःखात्मकतया तत्स्वरूपं वर्णयति।

अध्यात्ममधिभूतमधिदैवञ्च ॥७॥

निखिलं चातुर्विधप्राणिजातं जगत् तापत्रयासंयुक्तं न वेदितव्यं कथं त्रैविध्याश्रयादिति। किन्तावत् त्रैविध्यम् अत्रोच्यते। अध्यात्ममधिभूतमधिदैवञ्चेति आत्मनि शरीरे चित्ते वा अधि अध्यात्मं तच्च द्विविधं शारीरं मानसञ्च। शारीरञ्च वायुपित्तकफान. वैषम्यनिमित्तं, मानसञ्च कामक्रोधलोभमोहभीतिविषादेर्यामनोरथविषयादर्शननिमित्तम्। एतत् सर्वम् अध्यात्मदुःखं वेदितव्यम् अन्तरसाध्यत्वात्। अधिभूतं भूतमधिकृत्य मानुषपशुपक्षिसर्पस्थावरनिमित्तम्। अधिदैवं दैवमधि ग्रहविनायकयक्षराक्षसाद्यावेशनिमित्तम्। एतैस्त्रिविधैर्दुःखैः प्रकृतिप्रकृतिविकारविकाराणां तादात्म्यमिति भावः। एतेषां विनाशे बहवः सुगमोपायाः सन्ति तथाहि शारीरस्य दुःखस्य उपशमनाय वैद्यनिकरैः रसतिरसायनः सहजोपाय उपदिष्टः मानसस्यापि तापस्य प्रतिकाराय सुरम्यहर्म्यकामिन्यपूर्वभोजनालङ्कारादिहेतुः सुलभः एवञ्चाधिभूतस्य दुःखस्य निवारणाय नीतिशास्त्राभ्यासपटुता कारणम्। तथा अधिदैवस्य दुःखस्य निराकरणाय मणिमन्त्रयोगो हेतुः। स्यादेतत् तथापि न एतेषां तापत्रयाणाम् एतैरतिशया निवृत्तिः पुनःपुनरुत्पत्तिसम्भवात् ज्ञेयम् ॥७॥

सम्प्रति बहूः साधारणं धर्म्मं निनदिषु सूत्रं रचयति।

पञ्चाभिबुद्धयः ॥८॥

अभिबुध्यन्ते ज्ञायन्ते एभिरित्यभिबुद्धयः। कियत्यस्ताः पञ्च कतमाः पुनः। त्रिविधमन्तःकरणं बुद्धीन्द्रियं कर्म्मेन्द्रियञ्च। बुद्ध्यहङ्कारमनांस्यन्तःकरणानि अध्यवसायो बुद्धिधर्म्मः अभिमानः अहङ्कारस्य सङ्कल्पविकल्पौ मनसः। बुद्धीन्द्रियाणि दर्शनादिक्रियाभेदेन यथासंख्यं चक्षुःश्रोत्रघ्राणरसनात्वग्रूपाणि। अवान्तरभेदाः पञ्च। कर्म्मेन्द्रियाणि च वचनादिक्रियाभेदेन यथासंख्यं वाक्पाणिपादपायूपस्थरूपाणि पञ्चसाकल्येनावान्तरभेदेन त्रयोदशविधं करणमित्यर्थः। अत आदिरहितधारावाहिकजन्ममरणवति जगति समस्तवस्तुजातस्य वेदितव्यतया अभिबुद्धयः शक्याः। यत्तु अन्तःकरणानां मध्ये मनसोऽनिन्द्रियत्वमित्युक्तं तन्न युक्तियुक्तं मनसा सर्वेन्द्रियनियन्त्रा सह स्वस्वविषयेषु इन्द्रियादीनां तदात्मतावगमात् अयोगोलकवत्। एतेन बुद्ध्यहङ्कारयोरिन्द्रियता याता अहं सुखी अहमेव इत्यादि प्रत्यक्षावगमात्।

नहि बुद्ध्यादेर्निरिन्द्रियत्वेन प्रत्यक्षावगतिः। ननु तन्मते सर्वेषां पदार्थानां व्यापकत्वाङ्गीकारेऽपि पुरुषभेदे बुद्ध्यादिभेदो न न्याय्यः, कुत एकत्वावधारणात्। सत्यं, न यतो वासनानुरूपी परिणामी बुद्ध्यादिः स्वीक्रियते। अनया वासनया इन्द्रियाणां विषयविशेषप्रवृत्तिः निवृत्तिर्वा भवति।

स्यादेतत् वासनायाः कुत आविष्करणं इत्याशङ्कित आह।

पञ्च कर्म्मयोनयः ॥९॥

कर्म्म एव योनिः कारणं येषां ते कर्म्मयोनयः बुद्धिवृत्तयः

इति यावत्। अतः प्राणिनां सुखदुःखोपभोगाय क्लिष्टाक्लिष्ट-भेदेन कर्म्मयोनयः पञ्च व्यवह्रीयन्ते। यस्मात् अनया क्लिष्टया वृत्तया संसारानलसंतप्तः जन्तुः दुःखं भुङ्क्ते। एवम् अक्लिष्टया वृत्तया च उत्पन्नविवेकज्ञानः सन् मुमुक्षुः परमानन्दः सुख-मश्नाति। ताः कियत्यः? आह, प्रमाणविपर्य्ययविकल्पनिद्रा-स्मृतयः। षड्ध्यायसांख्यभाष्ये विज्ञानभिक्षुणा एतत् प्रपञ्चितं, विस्तारभियात्र न प्रतिपादितम्॥

इदानीं भूतानाम् एकतमस्य प्रकारभेदं रचयति।

प्रञ्च वायवः ॥१०॥

एते वायवः पञ्च वेदितव्याः, यतः उत्पत्तिविनाशिना प्राणिनां नाना वृत्तयः सन्ति। तथाहि प्राणोऽपानः समानश्च उदानो व्यान एव च। इति। कुत्रास्य वृत्तिभेदः? मुख-नासाद्यधिष्ठिता वृत्तिः प्राणस्य, पृष्ठपायूपस्थाद्यधिष्ठिता वृत्ति-रपानस्य, हृन्नाभिसर्व्वसन्ध्यधिष्ठिता वृत्तिरुदानस्य त्वगाद्य-धिष्ठिता वृत्तिर्व्यानस्य। ननु वायुरपि सर्व्वप्राणिक्रिया-कारकत्वलिप्सुश्चेतनः सन् निखिलं प्राणिनं प्रेरयति प्रकाश-यते वा, किं पुनरेतद्व्यतिरिक्तं चैतन्यं पुरुषं मन्यसे, सत्यं, नैवात्र विवदितव्यं किञ्चिदस्ति, श्रुतौ प्राणाद्यतिरिक्तपुरुषश्रवणात्। तथा हि श्रुतिः। "असङ्गोऽयं पुरुष इत्यादि। अथवा यदि प्राण एव चेतनः स्यात् तदा सुषुप्तिगतस्य पुरुषस्य प्राणानुत्-क्रमणस्य सुषुप्तौ प्राणविद्यमानतयापि जाग्रत्प्रत्यक्षज्ञानवत् तत्र घटपटादिरवगम्येत, ननु तदवगतिरस्ति करणोपर-मात्। यथा पुरस्वामी द्वाररक्षणे एकं दौवारिकं नियोज्य

सपरिवारो वहिर्गच्छति तथा पुरुषः प्राणमात्रं रक्षयित्वा आनन्दे विश्राम्यतीति मन्तव्यमिति ॥१०॥

इदानीं प्रकृतेः सत्वादिगुणानुक्त्वा कर्म्मणो निवर्त्तकं निरूपयति।

## पञ्च कर्म्मात्मानः ॥११॥

कर्म्मणाम् आत्मा व्यावर्त्तकः निवर्त्तक इति यावत्। इतश्च कर्म्मणाम् आत्मानः पञ्च अवगन्तव्याः यत्कारणं यमाभ्यास-वैराग्यसमाधिप्रज्ञाः एता उत्पाद्याः पुरुषाणां निखिलक्रिया निवर्त्तयन्ते। नचास्य कर्म्म इत्यादि प्रमाणात्। क्रमेण तानाह, अहिंसासत्यमस्तेयब्रह्मचर्य्यापरिग्रहाणां यमसंज्ञा। दीर्घकालनै-रन्तर्य्यसद्विषययत्नोऽभ्यासः। इहामुत्र भोगविरागो वैराग्यम्। मानसैकाग्रता समाधिः। सत्वपुरुषान्यथाज्ञानं प्रज्ञा। इति पातञ्जले व्यासदेवेनैतद्विस्तारितम् ॥११॥

सम्प्रति पञ्चानाम् अविद्यानाम् अवान्तरभेदनिरूपणैः सूत्रयति।

## पञ्चपर्व्वा अविद्याः ॥१२॥

अत्र पर्व्वशब्दो ग्रन्थिः, तद्वत्यः अविद्याः पञ्च यथा रज्जुग्रन्थे-र्दृढ़तया सहसा पुरुषस्तां मोक्तुं न शक्नोति तथा संसारग्रन्थे-रतिशयतयापि। ताः कियत्यः अविद्याः? अस्मिता-राग-द्वेषाभि-निवेशाः यथासंख्यं तमो-मोह-महामोह-तामिस्रान्धतामिस्र-संज्ञाः पञ्च स्युः। अनित्याशुचिदुःखेषु नित्यशुचिसुखाख्या अविद्या अनात्मनि आत्मज्ञानात् ब्राह्मण एवाहम् इति

वृत्तिः। अस्मिता अभिमानरूपेति यावत्, धनं मे प्रियतरमिति वृत्तीरागरूपा, इदं नेष्टं विनाशित्वात् इति वृत्तिर्द्वेषरूपा जन्ममरणरूपवृत्तिरभिनिवेशः। तमोमोहयोरष्टविधो भेदः, महामोहस्य दशविधः, इतरयोर्द्वयोः षट्त्रिंशद्भेदाः, कारिकायामेतदेवमुक्तं "भेदस्तमसोऽष्टविधो मोहस्य च दशविधो महामोहः। तामिस्रोऽष्टादशधा तथा भवत्यन्धतामिस्रः" ॥१२॥

तदेवं पञ्च विपरीतभेदानुक्त्वा अष्टाविंशतिप्रकारं रचयति।

## अष्टाविंशतिधाऽशक्तिः ॥१३॥

अत्र प्रकारार्थे धाप्रत्ययः, अतः अष्टाविंशतिप्रकारा अशक्तिः अवगम्यते यस्मादविद्यया वैचित्र्यरूपाणीति। सा कतिविधा? उच्यते, इन्द्रियाभिघातात् यथासंख्यम् एकादशेन्द्रियाणां श्रोत्र-त्वङ्-नेत्र-रसना-नासा-वाक्-पाणि-पाद-गुह्योपस्थ-मनसां बधिरता-कुण्ठतान्धता-जड़ता-ऽघ्राणता-मूकता-ऽकरणता-पङ्गुतोदावर्त्तता-क्लीवतामत्तता-एता एकादशधा वर्त्तन्ते। एवं तुष्टिसिद्धीनां विपरीतानां सप्तदशविधेति समष्टिरूपेण एषा अष्टाविंशतिरसिद्धिः इन्द्रियाणामाधारत्वेऽपि बुद्धेर्वृत्तिरन्तर्गता नान्या तदुपादानादन्यत्र वृत्त्यनवकाशात् ॥१३॥

इदानीं तुष्टिं परिगणयति।

## नवधा तुष्टिः ॥१४॥

सा द्विविधा तुष्टिः, आध्यात्मिका बाह्याश्च प्रकृत्युपादानकालभाग्याख्याः। आध्यात्मिकास्ततः विवेकसाक्षात्कारं हि परिणामभेदं प्रकृतिरेव करोति, अहन्तु पूर्णः किं ध्यानादिना इत्यात्म-

चिन्तनात् शिष्यस्य येयं तुष्टिरम्भ उच्यते, यतः प्रकृतिमात्रात् विवेको नास्ति प्रव्रज्यायां सा तुष्टिरेवालं ध्यानादिना, अत्रोपदेशे या तुष्टिः सोपादानाख्या सलिलमिति। बहुकालमपेक्ष्य समाधिना प्रव्रज्या भविष्यतीति तव व्यर्थं चपलतया, इत्युपदेशे या तुष्टिः सा कालाख्या मेघ इति। भाग्यबलादेव निर्विकल्पसमाधौ या तुष्टिः सा भाग्याख्या वृष्टिरुच्यते। प्रकृतिमहदहङ्कार-तन्मात्रस्थूलभूतेषु आत्मत्वेनाभिमन्यमानस्य बाह्याः पञ्च तुष्टयो जायन्ते, अर्ज्जनरक्षणनाशोपभोगहिंसानां विषयाणामुपरमात् तास्तुष्टयो यथासंख्यं पारं—सुपारं—पारपारं—अनुत्तमाम्भः-उत्तमाम्भः संज्ञाः। ये ये जना बाह्यां तुष्टिमाप्य हर्षिता भवेयुः न ते तत्त्वज्ञानिनः, अर्जितानामर्थानां बहुलदुःखसाध्यत्वात् तत्र तत्त्वज्ञानाभावाच्च। तथा च "अर्थानामर्ज्जने क्लेशस्तथैव परिरक्षणे। रागे दुःखं व्यये दुःखं हिंसायां तुल्यमेव वा॥" समष्टि-रूपेण एषा नवधा तुष्टिर्मन्यते।

सम्प्रति प्रयुक्तानां अविपरीतानां सिद्धीनां अवान्तर-भेदान् गणयन् रचयति।

अष्टधा सिद्धिः ॥१५॥

का पुनरसावष्टधा सिद्धिरिति विशेषेण निरूप्यते। सा द्विधा, तिस्रो मुख्याः, पञ्च गौण्यः। प्रमोदा मुदिता मोदमाना तिस्रो मुख्याः, अध्ययनं शब्दः ऊहः सुहृत्प्राप्तिर्दानञ्च गौण्यः। तथा च यदधिदैवस्य दुःखस्य तिरोभावं कृत्वा ज्ञानमुत्पद्यते तत् प्रमोदमाना सिद्धिः, यदधिभूतस्य दुःखस्य सेवादिनाप-नयनं कृत्वा ज्ञानं तत् मुदिता सिद्धिः, यदाध्यात्मिकस्य दुःख-स्यापनोदनानन्तरं ज्ञानं जन्यते तत् मोदमाना सिद्धिः। विधिवत्

सद्गुरोः सकाशात् आत्मविद्योपदेशः अध्ययनं, तत्प्रतिपाद्यः शब्दः, गुरोरुपदेशं विना पूर्व्वाभ्यासवशात् यत् तत्त्वस्य स्वयमूहनं सा सिद्धिरूहः। स्वजनसन्निधिमात्रेण यदानन्दो लभ्यते तत् सुहृत्प्राप्तिः, नितान्तलोकदुःखावगाहितचित्तेन विधिवत् यत् दानं तत् दानसिद्धिरिति।

इदानीं पञ्चविंशतितत्त्वेषु धर्म्मान्-विभजते।

## दश मूलिकार्थाः ॥१६॥

इतश्च एते मूलिका मूलीभूता अर्था विषया दश वेदितव्याः। यतः एतेषां पञ्चविंशतितत्त्वानां मध्ये एकैकस्मिन् पदार्थे यथा-सम्भवमेते विषयाः तिष्ठन्ति, के ते कुत्र वा स्थिता इत्याह। प्रधा-नमधिकृत्य एकत्वमर्थवत्त्वपारार्थ्यञ्च उक्तम्। पुरुषानधिकृत्य अन्यता अकर्त्तृत्वं बहुविधत्वञ्च, उभयमधिकृत्य अस्तित्वं संयोग-वियोगौ च। स्थूलसूक्ष्मशरीरमपेक्ष्य स्थितिः। तथा च भोजवा-र्त्तिके "प्रधानास्तित्वमेकत्वमर्थवत्त्वमथान्यता। पारार्थ्यञ्च तथा-नैक्यं वियोगो योग एव च। शेषवृत्तिरकर्त्तृत्वं मौलिकार्थाः स्मृता दश" इति।

अधुना पञ्चविंशतितत्त्वानां धर्म्मानुक्त्वा सृष्टिप्रकारं विवर्णयति।

## अनुग्रहः सर्गः ॥१७॥

अत्रानुशब्दः सहार्थः। अनुगृह्णातीत्यनुग्रहः स उत्पत्तिरिति। स च द्विप्रकारः, वासनारूपं सूक्ष्मशरीररूपञ्च ज्ञातुं शक्यते उभ-योरविनाभावात्। नहि वासनामन्तरेण लिङ्गशरीरमस्ति तथा लिङ्गशरीरमन्तरेण वासना नास्ति वीजाङ्कुरवदिति। ननु एतेषां बुद्ध्यादिपदार्थानां असादित्वात् कथं सर्ग आदिमानिति

मन्यते, सत्यं किन्तु अनादित्वेऽपि सुतरां वीचितरङ्गप्रवाह-न्यायेन आविर्भावतिरोभावरूपः सर्गः इति सूचितम्।

व्यष्टिरूपसर्गं विस्तारतो निरूप्यते।

## चतुर्द्दशविधो भूतसर्गः ॥१८॥

इतश्च चतुर्द्दशविधश्चतुर्द्दशप्रकारो निखिलभूतानां सर्गो वेदितव्यः। यस्मात् सत्वरजस्तमसां वैषम्यावस्थायां स्वेदज-अण्डज-उद्भिज्ज-जरायुजरूपेण वासनावशात् सर्वे प्राणिनः आविर्भवन्ति। स च सर्गः अवान्तरभेदेन त्रिधा; दैवो मानुष-स्तिर्य्यग्योनयश्च। आद्योऽष्टविधः। द्वितीयः एकः। तृतीयः पञ्चविधः। तान् प्रकारानाह, ब्राह्मप्राजापत्यैन्द्रगान्धर्व्वयक्ष-राक्षसपैशाचा इत्यष्टविधो दैवः सर्गः। मानुषश्चैकविधः। पशु-मृगपक्षिसरीसृपस्थावरा इति तिर्य्यग्योनयः। ननु कथं चतुर्दशविधो भूतसर्गः घटादिभूतसर्गावलोकनात् न पञ्चभूता-तिरिक्तानाम् उत्पत्तिमताम् अनवगमात् सर्व्वत्राप्येवमूहनीय-मिति। स्यादेतत् नहि तेषां प्रागुक्तानां पदार्थानां ज्ञानं विना बन्धनिवृत्तिरस्ति तस्मानादित्वादतः तत्स्वरूपं विवदिषुरुत्तर-सूत्रमवतारयति।

## त्रिविधो बन्धः ॥१९॥

अत्र किं नाम बन्ध उपाधिनिमित्तो मिथ्याज्ञानकल्पितः न पारमार्थिकः इति कियान् सः, प्राकृतिको वैकारिको दाक्षि-णकश्च, एष त्रिविधो बन्धो वेदितव्यः। ततः क्रमेण तदनु-वदति, तथाहि अष्टासु प्रकृतिषु परमार्थतत्वं मन्यमानाः समा-धिना यामुपासते तेषां तासु लयः प्राकृतिको बन्धः। ये विकारे

मिन्द्रियादिषु चैतन्यं मन्यमानाः तान्येव उपासते, तेषां तल्लयः वैकारिको बन्धः। ये संसारविमोहितचेतसः केवलं दक्षिणायनकर्म्मकलापं जानन्तः अश्वमेधादिरेव परमपुरुषार्थः नान्य इति मन्यमानाः कर्मफलम् अश्नन्ति तेषां दाक्षिणको-बन्धः, प्रतिनियतजन्ममरणानुगतत्वात् चक्रवदिति। तथा च श्रुतिः, "योनिमन्ये प्रपद्यन्ते शरीरत्वाय देहिनः। स्थाणु-मन्येऽनुसंयान्ति यथाकर्म यथाश्रुतम्"।

तस्मात् बन्धस्य अनादित्वेऽपि भूयो यत्नेन तन्निरासः कर्त्तव्यः इति विचिन्त्य सूत्रं पठति।

## त्रिविधो मोक्षः ॥२०॥

अथ पुण्यपापापचयवशेन प्राणिनां त्रिविधो मोक्षः प्रवर्त्तते। कः पुनरसावित्याह, क्रममोक्षः विदेहकैवल्यं स्वरूपप्रतिष्ठा च। यस्य विषयानुरागिणः तत्त्वानुसन्धानं कुर्वतः जन्मान्तरे मोक्षः भविष्यति, स क्रममोक्षः, बहूनां जन्मनामन्ते ज्ञानवान् मां प्रपद्यते इत्यादि स्मृतेः। विषयविरक्तः सुखदुःखे समे कृत्वा इति यद् आनन्दं प्राप्नोति स विदेहकैवल्यम् "अपामसोमम् अमृता अभूम इत्यादि श्रुतेः। अनन्तानागतकालं व्याप्य स्वरूपे-णावस्थानं स्वरूपप्रतिष्ठा न ह वै शरीरस्य प्रियाप्रिययोरपह-तिरस्ति इत्यादि श्रुतेः पुनरपि बुद्धिसत्त्वेऽनभिसम्बन्धात् ॥२०॥

सम्प्रति प्रमाणलक्षणं तावल्लक्षयति।

## त्रिविधं प्रमाणम् ॥२१॥

अथ प्रमीयते अनेनेति प्रमाणं प्रमां प्रति करणमिति यावत्।

त्रिविधं प्रमाणं दृष्टमनुमानमाप्तवचनञ्च। बुद्धिर्यद्वस्तु इन्द्रियद्वारेण चित्तादात्मरूपेण विषयीकरोति तत् प्रत्यक्षं दृष्टं, देवं पश्ये अहं सुखीत्यादि। अनुमानं त्रिविधं, पूर्ब्ववत् शेषवत् सामान्यतो दृष्टञ्च। यत्र कारणेन कार्य्यमनुमीयते तत् पूर्ब्ववत्। यथा मेघोन्नत्या वृष्टिरिति। यत्र कार्य्येण कारणमनुमीयते तत् शेषवत्, घटदर्शने परमाण्वादिरिति। यत्र व्याप्यपूर्वकम् अन्यत्र दृष्टस्य अन्यत्र दर्शनं सामान्यतो दृष्टं, यथा गृहे दृष्टस्य देवदत्तस्य बहिर्दर्शनेन गमनमनुमीयते। देवयक्षपतगमनुष्यवर्णाश्रमादिविभागहेतोः सर्व्वज्ञानाकरस्य वेदशास्त्रस्य अपौरुषेयतया इदं सत् इदमसत् अयं घट इत्यादि व्यवहारमूलम् आप्तवचनम्। अनेन त्रिविधेन प्रमाणेन प्रकृतिपुरुषयोः पृथगवगतिः परमपुरुषार्थकारणमिति।

तस्मादिदानीं एतान् पदार्थानुक्त्वा तदवबोधेन मुक्तिं साधयितुं संक्षेपेणानुवदिष्यन् सूत्रयति।

**एतत् सम्यक् ज्ञात्वा कृतकृत्यः स्यात।**
**न पुनस्त्रिविधेन दुःखेनाभिभूयते॥२२॥**

एतत् सुगमम्। इह सम्यक् ज्ञात्वा कृतकृत्यः स्याज्जन इति शेषः; त्रिविधेन आध्यात्मिकादिदुःखेन नाभिभूयते न संयुक्तो भवति, तेषामत्यन्तक्षयत्वेन पुनरुत्पत्तेरत्यभावात्।

नरेन्द्रेण श्रिया पूर्णं सांख्यभाष्यं विभाषितम्।
भूदेवेन मुदा शाके ब्रह्मधर्म्मादितीन्दुमे॥

समाप्तोऽयं ग्रन्थः।

---

## কাপিলভাষ্য।

সংস্কৃত দর্শনের অনুবাদ, সমুদায় অংশ উত্তম হয় না বিধায় দুরূহ স্থল পরিত্যাগ করিয়া তাৎপর্য্য-মাত্র বিদ্যানুরাগী মহোদয়গণের গোচরার্থ সন্নিবেশিত হইল। কিয়দ্দিনাবধি দর্শন সকল কোন্ সময়ে হই-য়াছে, এতন্নির্ণয় করিতে সভ্যসমাজে মহাগোলযোগ হইতেছে। অনেক মহাত্মা ইহার অনেকবিধ মীমাংসা করিয়াছেন এবং করিতেছেন; কিন্তু তাহাতে আমরা তৃপ্তিলাভ করিতে পারি নাই, যেহেতুক উপনিষদ্ ও দর্শনের মত মধ্যে মধ্যে সন্নিবেশিত হইয়াছে, ইহাতে বেদের পূর্ব্ব দর্শনশাস্ত্র আবিষ্কৃত হইয়াছে. এ কথা বলিলে বেদের আধুনিকত্ব প্রমাণ হয়। সকল দর্শনপ্রণেতাই বেদের অপৌরুষেয়তা স্বীকার করিয়াছেন অতএব তাহার নির্ণয় করিতে হইলে, ভাবনায় মস্তিষ্ক শুষ্ক হয়, পরন্তু এই মাত্র বলা যাইতে পারে যে, মহর্ষি কণাদ প্রথমে বৈশেষিক দর্শন প্রকাশ করিয়াছিলেন, তৎপরে মহর্ষি কপিল সাংখ্যদর্শন প্রকাশ করিয়াছেন, ইহা যুক্তি ও প্রমাণদ্বারা জ্ঞাত হওয়া যায়। "ন বয়ং ষট্পদার্থ-বাদিনঃ" এই সাংখ্যসূত্র দ্বারা ষট্পদার্থবাদী কণাদমত পূর্ব্বে প্রচারিত হইয়াছে এবং ষড়ধ্যায় সাংখ্যসূত্র দ্বারা কপিল ঋষি ষট্পদার্থবাদী কণাদ মতের ষট্পদার্থ

নিরাস করিয়াছেন ; ও পরমাণু সকল পদার্থের অবসান-স্থান, বৈশেষিক দর্শনকর্ত্তা ইহা স্বীকার করিয়াছেন, ইহা যুক্তিসিদ্ধ নহে। যেহেতুক পরমাণুকে মূর্ত্ত বলিলে তাহার নাশ হয়, যত মূর্ত্ত পদার্থ দেখা যায় সমুদায়ই কালেতে বিনাশ প্রাপ্ত হইয়া থাকে। পরমাণু অমূর্ত্ত বলিলে পরমাণুর সংযোগ হয় না ; কারণ নিরবয়ব সূক্ষ্ম পদার্থের সংযোগ কোন স্থলে দেখা যায় না। এই সকল পর্য্যালোচনা করিলে পদার্থতত্ত্ববিৎ মহোদয়গণ দর্শনশাস্ত্রের অগ্র পশ্চাৎ নির্ণয় করিতে সমর্থ হইবেন। এই অবনীমণ্ডলে তত্ত্বজ্ঞান ভিন্ন জীবগণের সুখের কারণ দেখা যাইতেছে না। সকল পদার্থই বিনাশী, ইহাতে অনুরাগ কেবল দুঃখের কারণ ভিন্ন আর কিছুই নহে, এতাবৎ বিবেচনায় অনেকেই অহর্নিশি তত্ত্বানুসন্ধানে নিযুক্ত ছিলেন। পরে আর্য্যজাতিকে উচ্চ পদবীতে অধিরূঢ় করণের মানসে মহর্ষি কণাদ পথদর্শকস্বরূপ বৈশেষিক দর্শন আবিষ্কার করিয়াছেন। ইহার অব্যবহিত পরে মহর্ষি কপিল সদোষ কণাদ মত নিরাসে ব্রতী হইয়া নিজ মত ব্যক্ত করিয়াছেন। ইহা উপরি উক্ত প্রমাণ ও যুক্তিদ্বারা অযৌক্তিক ও অপ্রামাণিক কহা যায় না। এইক্ষণে প্রকৃত দর্শনের অনুবাদে প্রবৃত্ত হওয়া গেল। ইহাতে পঞ্চবিংশতি সংখ্যক তত্ত্ব গণনা করায় ইহাকে সাংখ্য দর্শন এবং কাপিল দর্শন কহে। তত্ত্বজ্ঞানেচ্ছু পঞ্চশিখা-

চার্য্য মহর্ষি নারায়ণাবতার কপিলের সমীপবর্ত্তী হইলেন। নিগূঢ় তত্ত্ব ধারণ করা অতি সুকঠিন বিধায় প্রথমে দ্বাবিংশতি সূত্রদ্বারা উপদেষ্টা পূজ্যপাদ কপিল উপদেশ প্রদানে প্রবৃত্ত হইলেন। যথা যথার্থ পদার্থের সংক্ষেপ শ্রবণ কর। আমি অষ্ট প্রকৃতি বলিতেছি, সে প্রকৃতি এই—মূল প্রকৃতি, মহৎ, অহঙ্কার, পঞ্চতন্মাত্র অর্থাৎ শব্দ-তন্মাত্র, স্পর্শ-তন্মাত্র, রূপ-তন্মাত্র, রস-তন্মাত্র, গন্ধ-তন্মাত্র। মূল প্রকৃতি ত্রিগু-ণান্বিতা অর্থাৎ সত্ত্ব রজ ও তমোগুণের সমানাবস্থা এবং জড়াত্মিকা নিরবয়বা পরিণামরূপা নিত্যা। তাহা হইতেই মহত্তত্ত্ব প্রকাশ পায়; কিন্তু প্রকৃতি কোন পদার্থ হইতে প্রকাশ হয় নাই। সমুদায় পদার্থ মূলপ্রকৃতির পরিণাম স্বরূপ। যেমন দধি ও শিশিরখণ্ড দুগ্ধ ও জলের বিকার বিশেষ, সেইরূপ সকল বস্তুই মূলপ্রকৃতির বিকার বিশেষ। মূল প্রকৃতি কার্য্যেতে বিকৃতি হইয়া থাকে। মহত্তত্ত্ব মূলপ্রকৃতি হইতে প্রকাশ পায়। ইহাকে বুদ্ধি-বিশেষ কহে, অর্থাৎ সকল পদার্থের নিশ্চায়িকা। তদ্দ্বারা যাবদীয় পদার্থের কর্ত্তব্যাকর্ত্তব্যের নির্ণয় হয়। বুদ্ধির ধর্ম্ম আট প্রকার—ধর্ম্ম, জ্ঞান, বৈরাগ্য, ঐশ্বর্য্য, অধর্ম্ম, অজ্ঞান, অবৈরাগ্য অনৈশ্বর্য্য; ইহার মধ্যে আদি চারিটী সাত্ত্বিক অর্থাৎ সত্ত্বগুণোদ্ভবা, অন্ত্য চারিটী তামস, অর্থাৎ তমোগুণোদ্ভবা। মহৎ হইতে অহঙ্কার জন্মে, ইহাকে অভিমান বলা

যায়। 'আমি সুখী' 'আমার পুত্র' 'আমি সর্ব্বাংশে শ্রেষ্ঠ' ইত্যাদি ব্যবহার কেবল অহঙ্কারের কার্য্য। অহঙ্কারের রাজসভাগ হইতে পঞ্চতন্মাত্র জন্মে, এ অতিসূক্ষ্ম পদার্থ ও আকাশাদি পঞ্চভূতের কারণ স্বরূপ। ইহা যোগী ও দেবলোকের অপ্রত্যক্ষ নহে। আমি ষোড়শ বিকার পদার্থ বলিতেছি। পঞ্চ ভূত,পঞ্চ জ্ঞানেন্দ্রিয়, পঞ্চ কর্ম্মেন্দ্রিয় ও মন, এই ষোড়শ পদার্থকে বিকার বলে। ভূমি জল, বায়ু, অগ্নি, ও আকাশকে যথাক্রমে পঞ্চভূত বলা যায়, এই পঞ্চভূত পঞ্চতন্মাত্র হইতে প্রকাশ হইয়াছে। চক্ষুঃ, শ্রোত্র,ঘ্রাণ, রসনা, ত্বক্ এই পাঁচকে জ্ঞানেন্দ্রিয় ও অন্তরিন্দ্রিয় বলে এবং বাক্,পাণি,পাদ, পায়ু, উপস্থ এই পাঁচকে কর্ম্মেন্দ্রিয় এবং বাহ্যেন্দ্রিয় কহে। মনকে সংশয়াত্মক উভয়েন্দ্রিয় নিয়ন্তা বলা যাইতে পারে। অহঙ্কারের সাত্বিক অংশ হইতে উভয়েন্দ্রিয় এবং মনের আবির্ভাব হইয়াছে। যত কিছু পদার্থ, ষোড়শ বিকারের অন্তর্গতি, ইহার আর বিকার নাই। সকল কার্য্য, সৎ ও সূক্ষ্মরূপে স্ব স্ব কারণে তিরোভূত হইয়া থাকে যথা "বী-জে অঙ্কুর," "দুগ্ধে ঘৃত" "স্তনে ক্ষীর" ইত্যাদি।

পুরুষ নিত্য চেতনস্বরূপ সর্ব্বসাক্ষী সর্ব্বসত্ত্বাদি গুণশূন্য দ্রষ্টা বিবেকী অকর্ত্তা অনেকপ উদাসীন পদবাচ্য। ইনি কোন কার্য্য করেন না। সকলই প্রকৃতির কার্য্য, তথাপি "আমার পুত্র" "আমি সুখী" ইত্যাদি

জ্ঞান ভ্রমমাত্র; ফলতঃ আত্মার সুখ দুঃখ নাই। প্রকৃত্যাদি সমুদায় পদার্থ ত্রি-বিধ তাপে তাপিত। অর্থাৎ তাহা এই, মানসিক দুঃখ আধ্যাত্মিক পদবাচ্য। বাহ্যিক জ্বরাদি রোগজন্য দুঃখকে আধিদৈবিক বলে। উচ্চ স্থান হইতে পতনাদি জন্য দুঃখকে আধিভৌতিক বলে। এই ত্রিবিধ দুঃখ নিবৃত্তি কেবল প্রকৃতি পুরুষের পৃথক্ জ্ঞান ভিন্ন হয় না। প্রত্যক্ষ অনুমান ও বেদ-প্রমাণ ইহাকে ত্রি-বিধ প্রমাণ বলে। এই প্রমাণত্রয় দ্বারা "অয়ং পুরুষঃ" "ইয়ং প্রকৃতিঃ" ইত্যাদি জ্ঞান তত্ত্বজ্ঞান পদবাচ্য অর্থাৎ আমি পুরুষ নিত্যশুদ্ধঃ অমৃত-পানে প্রাসাদোপরি বাসে যেরূপ সুখী ধুলিশয্যায় ভিক্ষান্ন ভোজন করিয়া সেরূপ জ্ঞান, আমার বিকার নাই। প্রকৃতি সকল কার্য্য করে, অয়স্কান্তমণি সন্নিধানে লৌহের যেমন স্বয়ং স্পন্দনশক্তি প্রকাশ পায়, তদ্রূপ পুরুষ সন্নিধানে জড়াত্মিকা প্রকৃতির উৎপাদনী শক্তি প্রকাশ হয়। গৃহকর্ম্মে নিযুক্তা স্ত্রী পুরুষের ভোজন কাল পর্য্যন্ত ব্যাকুলা হইয়া থাকে, পুরুষের ভোজনানন্তর নিশ্চিন্তা হয়। প্রকৃতি সেইরূপ অচেতনা হইলেও সকল পদার্থই তাহা হইতে উৎপন্ন হয় যথা "গোময়ে কীটাদির" উৎপত্তি হয়।

সমাপ্ত।